ज्ञानचक्षुषा पश्यति सम्यक्संबोधावधिचित्तवशात् सर्वोपधिविनिर्मुक्त इति। एवं तथागतस्य पञ्चचक्षूंषि मांसादीनि शून्यतादर्शनं प्रति। अन्ये सत्त्वाः शून्यतादर्शनविषये जात्यन्धा इति। [1]एवं विस्तरो वक्ष्यमाणे परमाक्षरज्ञानसिद्धौ वक्तव्य इति तत्त्वभावना नियमः। अतत्त्वसाधने पुनर**प्रत्यक्षेऽनुमानं मृतकतनुरिवातत्त्वतः कल्पनं यच्चित्रादौ दर्शनीयमि**ति। [2]एवं प्रतिमा घटिता [3]चित्रिता बुद्धबोधिसत्त्वानां मण्डलचक्रं [T 366] वा लिखित्वा नियताकारं दर्शनीयं बालयोगिनां मन्दानां भावनार्थमिति विकल्पभावनानियमः॥ २३२॥

इदानीं विकल्पभावनाया उपाय उच्यते—

**रूपं वा मण्डलं वा प्रथममपि पटेऽतत्त्वतो भावनीयं**
**आकाशे तत्त्वयोगात् सकलमविकलं दृश्यमानं स्वचित्तम्।**
**वर्षार्धं वर्षमेकं गुरुनियमवशाद् यावदेव स्थिरं स्या-**
**न्मुद्रासङ्गेन तस्मात् कतिपयदिवसैरक्षरत्वं प्रयाति॥२३३॥**

रूपमित्यादि। इह बालयोगिनां स्वचित्तशक्त्या **रूपमि**त्येकदेवता पटे लिखिता भावनीया, **मण्डलं वा प्रथ**[311a]**ममपि पटेऽतत्त्वतो भावनीयम्। स्वचित्तमि**ति। तत्त्वतः पुन**राकाशे तत्त्वयोगादि**ति शून्यताकरुणायोगात्। **सकलमविकलं दृश्यमानं स्वचित्तं** सर्वाकारं रूपमण्डलचक्रकल्पनाऽभावादिति। एवं रूपादिकं कल्पितं पटे लिखितं वा, शून्यताबिम्बम[4]विकल्पं वा, **वर्षार्धं वर्षमेकं** वा **गुरुनियमवशाद् यावदेव स्थिरं स्यात्** [5]स्वचित्तम्। **मुद्रासङ्गेन तस्मादि**ति। इह स्वचित्ते प्रत्याहारध्यानप्राणायामधारणाबलेन स्थिरे जाते सति ततो मुद्रासङ्गेन **कतिपयदिवसैरि**ति कालचक्रदिनैः पञ्चविंशत्यधिकैकादशशतैरिति नियमः। एभिर्दिनैर्बोधिचित्त**मक्षरत्वं प्रयाति** वैमल्यं भवतीति सम्बन्धः। अत्र [6]पटपुस्तकप्रतिमालिखनाय उपस्थापको धर्मभाणकोऽन्वेषणीयः, तेन पटपुस्तकप्रतिमादिकं कर्त्तव्यं रौद्रसौम्यक्रियया। पूर्वोक्तमर्थ्या(र्घा)दिकं दत्त्वाऽऽचार्यस्य पूजा कार्या। संघभोज्यं गणचक्रं च दातव्यमर्घदानकाले। यथा प्रतिष्ठाकाले विधिः, तथार्घदानकालेऽपि यथाशक्तितः कार्य इति नियमः॥ २३३॥

इदानीं वज्रपदनियम उच्यते—

**सर्वस्मिंस्तन्त्रराजे खलु कुलिशपदं योगिनामेतदुक्तं**
**बालानां पाचनार्थं परमकरुणया गोपितं विश्वभर्त्रा।**
**तस्मात् तं भेदयित्वा प्रतिदिनसमये योगिना भावनीयं**
**मुद्रासिद्ध्यर्थहेतोर्जिनवरजनकाऽनाहतं कालचक्रम्॥२३४॥**

**॥ इति साधनापटलश्चतुर्थः॥**

१. क. एवं वागुरो ग. एषां, च. तेषां। २. ख. ग. च. छ. चित्रं। ३. क. ख. ग. च. छ. निषिक्ता। ४. च. विकल्पितं। ५. ग. 'स्व' नास्ति। ६. च. पटप्रतिमापुस्तक।

सर्वस्मिन्नित्यादि। इह **सर्वस्मिंस्तन्त्रराजे समाजा**दिके उपायतन्त्रे, **चक्रसंवरा**दिके प्रज्ञातन्त्रे खलु **कुलिशपदं** पूर्वोक्तमक्षरसुखं **योगिना**मिति। तदुक्तं **भगवता**—

[1]तद्यथा भगवान् बुद्धः संबुद्धोऽकारसम्भवः।
अकारः सर्ववर्णाग्र्यो महार्थः परमाक्षरः॥
महाप्राणो ह्यनुत्पादो वागुदाहारवर्जितः।
सर्वाभिलापहेत्वग्र्यः सर्ववाक्सुप्रभास्वरः॥ ( ना. सं. ५.१-२ )

इत्यादि, "ज्ञानकाय नमो नमः" ( ना० सं. ११.५ ) इति पर्यन्तं द्वाषष्ट्यधिकशतवृत्तेनोक्तो ज्ञानकायो **नामसंगीत्याम्**। स एव कुलिशपदमुच्यते। **सर्वस्मिन् तन्त्रराजे**। तदेव **बालानां पाचनार्थं परमकरुणया गोपितं विश्वभ**[311b]**र्त्रा** द्वीन्द्रियसुखं प्रतिपादितं बालानामिति। **तस्मात् तं** कुलिशपदं **भेदयित्वा प्रतिदिनसमये**ऽहर्निशं **योगिने**ति तीक्ष्णेन्द्रियेण पूर्वोक्तचक्षुषा **भावनीयं मुद्रासिद्धि**[2]निमित्तमिति महामुद्रासिद्धये। किं तत् ? **जिनवरजनका**ऽ**नाहतं कालचक्रं** तदिति नियमो भगवतः सर्वतन्त्रान्तरे योगिभिरवगन्तव्यः संबुद्धपदलाभायेति।

इति [3]श्रीमूलतन्त्रानुसारिण्यां लघुकालचक्रतन्त्रराजटीकायां
विमलप्रभायां द्वादशसाहस्रिकायां
नानासाधनमहोद्देशः पञ्चमः॥

**साधनापटलस्य टीका समाप्ता।**

[ [4]तन्मण्डलत्रितयबोधितशे(षे)करत्नराजप्रबोधितभुवः परमाद्भुतार्थाः।
उक्तस्तु साधयितुमिष्टतमः परार्थं नानार्थसाधनविधिः स षडङ्गयोगः॥
प्राप्तं मया कुशलमात्वकदत्तकेन संलेख्य साधनविधेः पटलं हि तेन।
लोकोत्तराद्वयसुखाकररत्नमूर्ध्ना ज्ञानैकचक्षुरमलः सकलोऽस्तु लोकः॥ ]

१. अथ वज्रधरः श्रीमान् इत्याद्यारभ्य इति चेत्साधु ? २. क. ख. छ. नियम इति। ३. क. ख. च. छ. 'श्री' नास्ति। ४. 'तन्मण्डल.... लोकः' भो. नास्ति। श्लोकद्वयं प्रतिलिपिकर्तुरस्ति न तु टीकाकारस्य।